स्वयमेव ततः पश्चाद् विराटद्रुपदान्वितः ।
[1]अथापरैर्महीपालैस् सह प्रायान्महीपतिः ॥ ११

भीम[2]धन्वायनी सेना धृष्टद्युम्नेन पालिता ।
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥ १२

ततः पुनरनीकानि [3]न्ययोजयत बुद्धिमान् ।
मोहयन् धृतराष्ट्रस्य पुत्राणां बुद्धिविस्रवम् ॥ १३

द्रौपदेयान् महेष्वासान् अभिमन्युं च भारत ।
नकुलं सहदेवं च सर्वांश्चैव प्रभद्रकान् ॥ १४

[4]दश चाश्वसहस्राणि द्विसहस्राणि दन्तिनाम् ।
अयुतं च पदातीनां रथान् पञ्चशतं तथा ॥ १५

भीमसेनं च दुर्धर्षं प्रथमं [5]प्रादिशद्बलम् ।
मध्यमे च विराटं च जयत्सेनं च मागधम् ॥ १६

महारथौ महात्मानौ युधामन्यूत्तमौजसौ ।
वीर्यवन्तौ महात्मानौ गदाकार्मुकधारिणौ ॥ १७
अन्वयातां तदा मध्ये वासुदेवधनञ्जयौ ॥ १७॥

1. ग-घ-ङ-मा—तथाऽन्यैः पृथिवीपालैस् सह प्रायान्महारथः ।
[पाठान्तरम्]

2. ग-घ-ङ-मा—धन्वायती सेना धृष्टद्युम्नपुरस्कृता ।
3. ङ—व्यादिदेश युधिष्ठिरः
4. ख-ग-घ-ङ—हयान् पञ्चसहस्राणि । म—दश पञ्चसहस्राणि ।
5. ख-घ-ङ—व्यादिशद्बलम्

[1]बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ।
तेषां विंशतिसाहस्रा हयाश्शूरैरधिष्ठिताः ॥ १८॥

पञ्च नागसहस्राणि रथवंशाश्च सर्वशः ॥ १९

पदातयश्च ये शूराः कार्मुकासिगदाधराः ।
[2]सहस्रशोऽन्वयुः पश्चाद् अग्रतश्च सहस्रशः ॥ २०

युधिष्ठिरो यत्र सैन्ये [3]यत्र चैव च फल्गुनः ।
तत्र ते पृथिवीपाला भूयिष्ठं पर्यवस्थिताः ॥ २१

तत्र नागसहस्राणि हयानामयुतानि च ॥ २१॥

[4]चेकितानस्स्वसैन्येन महता पार्थिवर्षभः ।
धृष्टकेतुश्च चेदीनां प्रणेता तत्र वाहिनीम् ॥ २२॥

सात्यकिश्च महेष्वासो वृष्णीनां प्रवरो रथः ।
वृतश्शतसहस्रेण रथानां प्राणदद्बली ॥ २३॥

क्षत्रदेवब्रह्मदेवौ रथस्थौ पुरुषर्षभौ ।
जघनं पालयन्तौ च पृष्ठतोऽनुप्रजग्मतुः ॥ २४॥

भक्ष्यं भोज्यं च यत् किञ्चिद् यानं युग्यं च सर्वशः ॥ २५

---

1. ब-ङ—ततस्तु पृथिवीपालाः नष्टमित्येव मेनिरे ।
अन्तरिक्षगतास्सर्वे देवास्सेन्द्रपुरोगमाः ॥ [अधिकः पाठः]
2. ङ—अर्धद्वयं न दृश्यते
3. अ-क-घ-ङ-म—स्वयमेव बलार्णवे
4. अ-क—कोशयोरेव इत आरभ्य एकादश श्लोका दृश्यन्ते ।

तत्र नागसहस्राणि हयानामयुतानि च ।
फल्गु सर्वं कलत्रं च यत् किञ्चित् कृशदुर्बलम् ॥ २६
कोशसञ्चयवाहाश्च कोष्ठागारास्तथैव च ।
गजानीकेन सङ्गृह्य शनैः प्रायाद्युधिष्ठिरः ॥ २७
तमन्वयात् सत्यधृतिस् सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान् वसुदानश्च पुत्रः काश्यस्य वै विभुः ॥ २८
रथाधिपतिसाहस्रा ये तेषामनुयायिनः ।
हयानां नव कोट्यश्च महतां किङ्किणीकिनाम् ॥ २९
गजा विंशतिसाहस्रा ईषादन्ताः प्रहारिणः ।
कुलीना भिन्नकरटा मेघा इव विसर्पिणः ॥ ३०
षष्टिनागसहस्राणि दशान्यानि च भारत ।
युधिष्ठिरस्य यान्यासन् युधि सैन्ये महात्मनः ॥ ३१
क्षरन्त इव जीमूताः प्रभिन्नकरटामुखाः ।
राजानमन्वयुः पश्चाच् चलन्त इव पर्वताः ॥ ३२
एवं तस्य बलं भीष्मं कुन्तीपुत्रस्य धीमतः ॥ ३२॥
तथा रथसहस्राणि पदातीनां च भारत ॥ ३३
यदाश्रित्याथ युयुधे धार्तराष्ट्रं सुयोधनम् ।
ततोऽन्ये [1]शतशः पश्चात् सहस्रायुतशो नराः ॥ ३४
नर्दन्तः प्रययुस्तेषाम् अनीकानि सहस्रशः ॥ ३४॥

---

1. मा—गणशः पश्चात् सहस्रशतशो

तत्र भेरीसहस्राणि शङ्खानामयुतानि च ।
वादयन्ति स्म संहृष्टास् सहस्रायुतशो नराः ॥ ३५॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

॥ ६० ॥ अम्बोपाख्यानपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

[अस्मिन्नध्याये ३५॥ श्लोकाः]

॥ अम्बोपाख्यानपर्व समाप्तम् ॥ ॥ उद्योगपर्व च समाप्तम् ॥ ५ ॥

॥ अस्मिन्नुद्योगपर्वणि श्लोकाः ६६६७॥* ॥

---

अतःपरं भीष्मपर्व भविष्यति । तस्यायमाद्यः श्लोकः ॥

---

जनमेजयः—

कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः ।
पार्थिवास्सुमहात्मानो नानादेशसमागताः ॥ १

* यद्यपि अस्मिन् पर्वणि पर्वसङ्ग्रहाध्यायोक्तरीत्या ६९९८ श्लोकै-र्भाव्यम्; तथाऽपि ६६६७॥ श्लोका एवोपलभ्यन्ते ॥

॥ श्रीरस्तु ॥

# महाभारतस्य उद्योगपर्वविषयाणां

# अक्षरमातृकाक्रमेण सूचनम्

अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पुटम्

॥ श्रीः ॥

# उद्योगपर्वस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ३४ | १ | त दृष्ट्वा | तं दृष्ट्वा |
| ४१ | १६ | भरतषभ | भरतर्षभ |
| ५१ | ६ | र्विष्णुँ | र्विष्णुं |
| ५५ | १३ | ऋंषिभि | ऋषिभि |
| ७४ | १५ | व्रीडा | व्रीडा |
| ८२ | ७ | कथयध्वं | कथय त्वम् |
| ११३ | १४ | त्वाभिऽनन्दामि | त्वाऽभिनन्दामि |
| ११५ | ७ | वैश्यापूत्रः | वेश्यापुत्रः |
| ११९ | ५ | पर्व चतुर्थौ | पर्वणि चतुर्थौ |
| १२० | १९ | यद्युद्यष्मासु | यद्यद्युष्मासु |
| १२१ | १५ | यान्मां | यन्मां |
| १२४ | ११ | धार्तराष्ट्रस्य | धार्तराष्ट्रस्य |
| १३२ | १ | भूतपर्वं | भूतपूर्वं |
| १३५ | ५ | पारलोक्यं | पारलौक्यं |
| १६० | १ | प्राञ्जिलिश्च | प्राञ्जलिश्च |
| १६८ | ४ | [illegible]रिच्छेर्जधन्यम् | परिपृच्छेर्जघन्यम् |
| २०० | २१ | [illegible]र्थ्यम् | रथ्यम् |
| २०८ | १६ | घालाच्च | बालाच्च |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| २०९ | १७ | कुचतसः | कुचेतसः |
| २१८ | ३ | ब्रुस्य | बृस्य |
| २१९ | १९ | ऋद्धा | क्रुद्धौ |
| २९४ | १४ | तन्प्रश्न | तत्प्रश्न |
| ३१५ | १४ | कृर्वते | कुर्वते |
| ३३६ | ८ | धार्तराष्ट्रानतप्स्यत् | धार्तराष्ट्रोऽन्वतप्स्यत् |
| ,, | १६ | धार्तराष्ट्रानतप्स्यत् | धार्तराष्ट्रोऽन्वतप्स्यत् |
| ३३८ | ८ | पराङ्मुस्वं | पराङ्मुखं |
| ३४५ | १ | व्वासा | व्यासा |
| ३५२ | १८ | ततोऽहि | ततो हि |
| ३५५ | १५ | गस्त्रं | चास्त्रं |
| ३६९ | १३ | कुन्त्री | कुन्ती |
| ,, | १९ | कुन्त्री | कुन्ती |
| ३७५ | १७ | उरु | ऊरु |
| ३८६ | १८ | कष्णः | कृष्णः |
| ४१८ | २१ | श्राकायं | श्लोकोऽयं |
| ४३४ | ४ | गम्मीरः | गम्भीरः |
| ४९८ | १४ | पीणा | पीनः |
| ५१२ | ७ | नगराणि | नगराणि च |
| ५५६ | २ | व्यतीथाय | व्यतीयाय |
| ५६८ | १७ | परिवसरः | परिवत्सरः |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ५७३ | २३ | इदमध | इदमर्धं |
| ७११ | १४ | यावद्धलं | यावद्बलं |
| ७२९ | १७ | रहृते | रहिते |
| ७३९ | १६ | त्वमवर्तिथाः | त्वमवर्तथाः |
| ७७९ | १० | प्रतिजानिहि | प्रतिजानीहि |
| ७८९ | ३ | वंशश् त्वया | वंशस् त्वया |
| ८०१ | १७ | कृतास्त्री | कृतास्त्रो |
| ८०७ | १७ | यैया | ययौ |
| ८१८ | १५ | पाण्डवेयां | पाण्डवेया |
| ८४५ | २८ | पारुष | पौरुष |
| ८५० | १९ | पोरुषो | पुरुषो |
| ८६८ | १५ | सव | सर्व |
| ८८१ | १३ | वीरस | वीरस् |
| ९७३ | ५ | — | भीष्मः— |

PRINTED BY V. RAMASWAMY SASTRULU & SONS,
AT THE 'VAVILLA' PRESS, MADRAS.—1932.